


## वाराणसेयसंस्कृतविश्वविद्यालयदर्शनपरिषदधिवेशनस्य

## सभापतीनाम्

अनन्तश्रीविभूषितजगद्गुरुशङ्कराचार्याणां काशीस्थोर्ध्वाम्नायसुमेरुपीठाधीश्वराणां
स्वामिश्रीमहेश्वरानन्दसरस्वतीमहाराजानां

# सभापतिभाषणम्

दिनाङ्कः २३-१२-६७

# सभापति-भाषणम्

विद्वद्धौरेयाः,

मलयानिल इव वासन्तिकः, गङ्गाप्रवाह इव निर्मलः, तीर्थराशिरिव समभ्यर्चनीयः, प्रभातसमय इव प्रबोधमयः, निधानं विचाराणाम्, विमर्दनं तमसाम्, निष्कर्षः श्रुतीनाम्, परिपोषस्तपश्चर्याणाम्, परितोषः कर्त्तव्यकौशलानाम्, दिव्यदृष्टिः समाधिभाजाम्, पराकाष्ठा प्रतिभानाम्, प्रदर्शनमृतम्भरायाः, राजपथो निःश्रेयसस्य, अनावृत्तिराभीलानाम्, प्रशमनं विक्षोभाणाम्, समुन्नयनं जीवनस्य, प्राणा भारतस्य, अवतारो विश्वेश्वरस्य, प्रसन्नोद्यानसौभाग्यं सरस्वत्या विराजते दार्शनिकसमारोहसन्दर्भो वाराणसेय-संस्कृतविश्वविद्यालयस्य।

अस्मिन् महनीये महामहिम्नि मनोहरकलेवरकमनीये चाकचक्यचमत्कृतोदञ्चितचारुचर्ये प्रभामये वितानमये प्रमोदसम्मोदानन्दमये महोत्सवे मृदङ्गवेणुवीणावादनकौशलकलाकलनीये सङ्गीतोत्तुङ्गमङ्गलभङ्गध्वनिमाधुर्यसम्भारसम्भृते विद्वन्मण्डलमण्डितमण्डपे आकारिता वयं कामपि अवतारणां पुरस्कुर्महे।

मन्ये, मङ्गलसंवाद इव श्रोत्रपेयः, द्राक्षारस इव मधुरः, मिष्टान्नराशिरिवाकर्षणः, स्वराज्यश्रीविलास इव सोल्लासः, कौतुकावहः, प्रत्नोऽपि नूतन इव प्रेक्षणीयकमिव लोभनीयो भवताद् भव्यभावनाभरितान्तरङ्गाणां भवतामन्तेवसतामपीति प्रस्तूयते श्रावयितुं निर्माणावतारणम्।

गीर्वाणवाणीप्रणयिनः अन्तर्वाणयः समवेता महानुभावाः सर्वे अत्र समुपस्थिताः, किमप्यत्रावधानदानं दीयमानमभ्यर्थयामहे, आकर्णयन्तु भवन्तः —

नानादृशां सुमनसां स्रजमावहन्ती
सम्प्रत्ननूत्नसुभगश्रुतिभिर्विपञ्चीम्।
सर्वेश्वराक्वणितकोणमियं रणन्ती
स्यान्नः प्रसन्नवरदा वचसामधीशा॥

आम्नायमौलिकलितातिरहस्यमाला
सौरभ्यभारभरमन्थरपावमानैः।
आमोदिता वसुमती निखिलैव तस्मात्
किं वर्ण्यतां प्रमुदिता यदि भारतीयाः॥

स्फूर्तिप्रदं सकलमञ्जुलमर्त्तिहारं
विश्रामधाम धिषणाधिषणैकगम्यम् ।
चञ्चद्विचाररुचिरं करुणाभिराम-
मारामवाङ्मयमुपाध्वमहो रसज्ञाः ॥

प्रक्रम्य साक्ष्यमतिरूढमतीतदोषं
शोषं सहस्रकुधियामधिशय्यपोषम् ।
शब्दं समाप्य निगमान्तमतुल्यलीलाः
सर्वा दृशो भरतभूकलकण्ठहाराः ॥

धाराः शतं विसृमराः कुटिलाः स्वतन्त्राः
सङ्घर्षसारसरसाः प्रबलाः पराध्याः ।
पृञ्चन्ति यत्र किल लोलविशाललीला-
स्तत्तत्त्वमेकमतुलात्मनिभालनीयम् ॥

निश्चप्रचानुभवसाक्षिकमद्वितीयं
कल्याणदं चिरपरीक्षितमात्महृद्यम् ।
वन्द्यं समस्तजगतां विबुधाभिनन्द्यं
तद्दर्शनाद्भुतसरोवरमाश्रयध्वम् ॥

लोभाभिभूतमनसां तमसां निधीनां
सीमा कियत्युदयते परमप्रकृष्टेः ।
आमुत्रिकैहिकविवादमपास्य धीरै-
स्तद्दार्शनी दृगभिगम्य समर्हणीया ॥

साम्राज्यमाज्यमधिगम्य समन्वयानां
सम्भावना सुचिरजीवनमिष्टपुष्टिम् ।
संसेव्य साधुचरितैरुचितैः समर्च्या
श्रीभारतीयभरभासुरभूमिरेषा ॥

ज्योत्स्ना इव प्रचुरिता इव शर्करा वा
द्राक्षारसाभिमिलिता इव दुग्धधाराः ।
स्फीता घृताप्लुततरा मधुमिश्रिता वा
विश्वादृशो जनमनःसु समुल्लसन्ति ॥

प्रामाण्यपूर्णनिकषेषु निघृष्य हृष्टै-
रुत्तोलितासु गुणगौरवगर्वितासु ।
दृश्वैकया निजपरम्परया प्रसन्ना
अग्रे सरन्तु विबुधेन्द्रमणिप्रवेकाः ॥

केचिद्रुजं प्रशमयन्ति तनूग्रदंष्ट्रां
मध्येक्षमेक इतरे मनसि प्रवीणाः ।
किन्तु क्षणाय महसे न तु शाश्वताय
तेनाशु दृष्टिमभिधावत दार्शनीं नः ॥

श्रौतेषु पूर्वदलमुत्तममाहुरेके
संविद्रते तदपरे परशुद्धिमभ्याम् ।
धीरा विवृण्वत इदं परमार्थविज्ञाः
शास्त्रैस्तथा सुदृढतर्कशतैरभेद्यैः ॥

देहोऽसवः करणमानसबुद्धयश्च
स्वात्मेति तार्किकशिरोमणयो भणन्ति ।
श्रौतास्तदुत्तरमबाध्यचिदेकरूपं
सर्वप्रकाशममलं सुखमद्वितीयम् ॥

सत्यो दमोऽर्थशुचिता विनयो नयश्च
व्यायामसंविभजने निजदेशरक्षा ।
सन्नागरीव्यवहृतिर्विविधाश्च विद्या
विज्ञानकौशलकलाः सकलैरुपास्याः ॥

आराधना सुचरितस्य सुसेवितस्य
विद्वद्भिराद्दततरस्य समस्तवर्गैः ।
अन्तेवसद्भिरखिलैश्च मनीषिसङ्घैः
सम्पादिता भरतभूविजयाय भूयात् ॥

कल्याणमावहति मङ्गलमातनोति
सौभाग्यमेधयति वर्धयते च शक्तीः ।
सर्वा दृशः समनुयन्ति न वादलेशः
प्रागुक्तसाधुचरितं किल भारतीयम् ॥

प्रत्यक्षमेव किल मानमिदं न सम्यग्
लुप्येत वाग्व्यवहृतिर्विदुषामपि स्यात् ।
सम्भावनां न जनयेदविकम्पनीयां
लोकप्रवृत्तिमिति संविमृशन्तु धीराः ॥

संवर्धितोऽनुमितिमानविशेष एष
प्रोत्तोषणो न सुधियां दृढयुक्तिरिक्तः ।
प्रामाण्यमेतदनुबन्धि यतः प्रसाध्यं
पर्यङ्कवत्तदिह साधनमुत्तरेषाम् ॥

सौरस्तथैन्दव इह प्रथितप्रकाश-
स्तद्वद् द्वयं प्रमितिसाधनमेषितव्यम् ।
दैवोऽपरः प्रकटितः परमर्चनीय
इत्येताअस्तिकधियां खलु विस्तराः स्युः ॥

औपम्यमानपदमानविजृम्भणानि
वाञ्छन्त्यभावमतयेऽनुपलब्धिपुष्टिम् ।
न व्याप्तिरत्र घटते न च सन्निकर्षः
पश्चाद्भवा ननु विशेष्यविशेषणश्रीः ॥

व्याप्तिः परत्र गमिता न परं विवोढुं
विभ्वी भवेदनुपपत्तिरिह प्रमाणम् ।
एष्टव्यमत्र सुदृशां खलु षट्प्रमाणी
जागर्त्ति वैदिकपथानुभवैकगम्या ॥

एतत्प्रमाणनिधिसूत्थितसद्विचारै-
र्मन्थाभ्रमैः पुलकिताम्बुधिशास्त्ररत्नैः ।
हारावलीं विरचितां दधते मनोज्ञा
विज्ञास्त एव विरताभिनिवेशलेशाः ॥

शुद्धाद्वितीयपरमार्थपरप्रकाशः
कूटस्थनिर्वृत्तिनिरञ्जननिर्विकारः ।
आत्मा विभुश्चरमकारणसर्वलोका-
धिष्ठानसाक्षिरससारशिवस्तुरीयः ॥

उद्गूर्णजाड्यगरिमा लघिमानमेनं
नेतुं न जातु विभवेद् बलशालिमाया ।
आरोपितैरपि शतैः परमार्थवस्तु
प्रस्तूयते किमु तदन्यतयान्यथापि ॥

मान्या विदां प्रतिमुहूर्त्तमिदं विशीर्णा-
वस्थं गदाकुलमुदञ्चितकालिमानम् ।
कायं कथं कथयितुं मनसाऽपि धीरः
सङ्कल्पयेत् स्वमिति तत्त्वधियां विमर्शः ॥

अद्यत्व एतदुदघोष्यत याति लेखं
वृत्तान्तपत्रनिबहेषु च यत्र तत्र ।
जन्मान्तरानुभविनः शिशवः प्रभूताः
सम्यक् परीक्षणविनिश्चितसत्यवाचः ॥

नोपेक्ष्यमेतदनुसन्दधतां यदेते
शुद्धा मृतात्मविसरान् क्वचिदानयन्ति ।
आलिख्य तद्वचनतत्त्वमुदीरयन्ति
श्रुत्वा रदेऽङ्गुलिमुपस्थापयते जनौघः ॥

किञ्चेदमुञ्चितचिराञ्चितचारुचर्यं
यन्मानसस्थनिधिसाधितसिद्धिभूमा ।
वार्त्तां करोति सुहृदा किल तादृशेन
देशे दवीयसि गतोऽपि विलक्षणश्रीः ॥

तस्मात् सुनिश्चितमहो नहि देह आत्मा
नो शैशवं प्रवयसां स्मृतिमेतुमर्हम् ।
स्मर्त्तव्यतानुभवयोर्वत हेतुभावो
भिन्नाधृतिं समवलम्ब्य कथं प्रसिध्येत् ॥

आतश्च पिप्पलपलाशचलो न आत्मे-
त्येषा मतिर्न नृपतिप्रियकापि साध्या ।
निष्पीडिता न विरमत्यधुनापि लुप्ते
रम्या विचारपदवीयमुपासनीया ॥

विज्ञानमात्रमिदमस्ति दलं न सम्यग्
वित्तिर्न कापि विषयं न परामृशेद्या ।
स्वप्ने भ्रमेऽपि सविशेषतया विभान्ति
प्रत्यक्षमेतदिति सर्वजनानुभूतिः ॥

हेतुर्न कोऽपि घटते य इदं विदध्यात्
चेन्निर्मिमीत सकलानि परास्य शक्तिः ।
सिद्धा श्रुतिस्मृतिपुराणदृढानुमानै-
र्नो सङ्क्रमक्रम इहोद्भवितुं समर्थः ॥

शून्याद् विवर्त्तत इदं खलु नोद्भवार्हं
जायेत सत्कथमसत्त्वभृतोऽतितुच्छात्।
शून्येऽपि मानविहता न हि सिद्धिरिष्टा-
प्यत्यन्ततोऽनुभव एव तदर्थमेष्यः ॥

भिन्नं विदो न जडता मलिना विजह्याद्
ज्ञानाश्रयोऽत इह नैव भवेत् स आत्मा।
ज्ञानं न नश्वरमुपैति तनूं तदीयां
माकीं तथा सति पुराणनवीनतास्ताम् ॥

खद्योतसन्निभतया परिनिश्चितोऽपि
कैश्चित् प्रवृद्धपुरुषैर्न ददीत मुक्तिम्।
दिव्यावदातविदि नात्र परस्य कस्या-
प्यन्तःप्रवेश इति वेदविदो वदन्ति ॥

साङ्कर्यमत्र जडिमा विदिमा विमर्दं
माजीजनज्जनितदेहकृतार्धभागः ।
सच्चिद्घने परमपूर्णरसे प्रकाशे
क्वाखण्ड एक परवस्तुनि काश्मलीभूः ॥

आनन्दसान्द्रपरमप्रकटप्रकाश
एकः परः शिव उदित्वरसामरस्यः।
इच्छा विमर्शवपुषा परया स्वशक्त्या
स्पन्दात्मना मधुरविस्फुरितोज्ज्वलश्रीः ॥

चैतन्यमात्रमखिलं न ततो विभिन्ना
माया समस्ति शिवशक्तिदलद्वयं प्राक्।
आलेख्य सङ्कुचनविस्फुरणप्रकारा
सैका चितिर्विजयते परमस्वतन्त्रा ॥

एवं विभावनवशाद् विविधप्रकारा
ये भावुकाः प्रकटयन्ति विभेदवादान् ।
ते स्थापयन्ति विहगद्वयनीडहृद्यां
धन्यां श्रुतिं सहितयुक्तिभरं प्रमाणम् ॥

धन्याः कुशाग्रधिषणाः श्रुतयो यमर्थं
संसाधयन्ति किल काल्पनिकः स सर्वः ।
एतावता श्रुतिततिर्बत सङ्गतार्था
'नाना न किञ्चन', 'सदेव' दृढं प्रमाणम् ॥

प्रारम्भसंहृतिपुरःसरषट्प्रमाणी
तात्पर्यलिङ्गपरिनिष्टपनात्मलाभा ।
ब्रह्माद्वयेऽनुभवमात्रतनावनन्ते
शेतेऽमृतोद्भवकरी मथितप्रमोहा ॥

विज्ञानमेव ननु नाशनमज्ञताया
रज्जुश्रितो भुजग एति न नाशमन्यैः ।
यद्वध्यघातकविभावविमर्दभूमि-
र्दृष्टा विरोधवशतो न हि यत्र तत्र ॥

दृश्यत्वसीमितजडत्वविभिन्नबीजै-
र्मिथ्यात्वसाधनविशङ्कटकोटिरूढैः ।
स्वाभावभूमिनिजभूमिपदार्थसार्थै-
रुच्छूनमेतदखिलं प्रतिभाति विश्वम् ॥

दृश्यत्वसिद्धमनृतत्वमिदं स्वरूपेऽ-
प्यास्ते तथा सति न तत्र ऋतत्वमीयात् ।
दृश्यत्वमेव तदवच्छिदिमा बिभर्त्ति
प्रोत्तिष्ठते तदिह युक्तिरियं बलिष्ठा ॥

भ्रान्तोऽपि बोध उपपन्नयथार्थरूपः
श्रौतं त्रिवृत्करणमस्ति यतः प्रमाणम् ।
स्वप्नेऽपि सृष्टिमभिवर्णयते यतश्च
धीराः ! महाकलुषमापतितं भ्रमात् स्यात् ॥

पञ्चीकृतिः किल विगर्जति मानमाप्ता
स्वाप्नं सृजत्यखिलमेकलमूलमाया ।
भ्रान्तं तथा व्यवहृतर्भजते न सत्तां
तत्प्रातिभासिकमिहास्ति न पापलेशः ।

षड्लिङ्गनिर्णयमवाप्य वचोभिरुद्यत्
तात्पर्यगौरवबलिष्ठवरिष्ठनिष्ठैः ।
वाक्यैरतुल्यबलशालिभिरात्ततन्द्रै-
रन्यरतत्परतैर्नाह योद्धुमर्हम् ॥

सम्यक् समाधिमधिगम्य निजात्मदृष्टि-
मप्यल्पतो विरहितां कलुषाभियोगैः ।
प्राप्यामृताब्धिलहरीमनिवर्त्तनीया
मानुष्यकं सफलतां नयनीयमास्ते ॥

सर्वा दृशोऽलघुलघुप्रपथप्रयाताः
संसाधयन्ति रुचिरां व्यवहारसिद्धिम् ।
श्रीभारतार्थपरमार्थसमस्तयत्ना
धन्यां श्रियं समधिकां परिबृंहयन्ति ॥

अग्रे सरन्तु यदि काश्चिदिदं प्रसाध्य
कः श्रेयसि प्रविततेऽपि वितृप्तिमेति ।
कैवल्यमस्तु भवबन्धनतो बुधानां
वैराग्यभाः शमयतात् किल कालिमानम् ॥

आसूत्रितं तदिह दार्शनिकं कवीन्द्रा-
स्तत्त्वं शुभं प्रभवतां विदुषां पुरस्तात् ।
जायेत तोषकरमेव तथाप्रकार्ये
चर्चा चलाचलकृतेऽवसरप्रदं स्यात् ॥

विद्वद्वराः कुलपतिप्रवरा महान्तः
सान्ते वसन्त इति सूचयता प्रबन्धः ।
विश्वेश्वरस्थितिजुषामयका प्रपूर्य
प्रोल्लासितो जनयतान्नु सुप्रभातम् ॥

काशीपीठाधिनाथेन शङ्कराचार्यभिक्षुणा ।
महेश्वरेण रचितो निबन्धोऽस्तु सतां मुदे ॥

॥ इति शम् ॥

